# कैवल्योपनिषद्

लेखक—स्वामी आनन्दाश्रमजी



श्रीमती रानी कृष्णा कुमारी देवी

सिनगा, की आज्ञानुसार

पं० शीतलप्रसादजी दूबे द्वारा

प्रकाशित ।

प्रथमबार १००० प्रति ] [ सम्वत् १९८६ वि०

ॐ तत्सद्ब्रह्मणेनमः ।

# कैवल्योपनिषद् ।

——:※:——

## श्रीमच्छङ्करानन्द कृत टीकायुक्ता

यमनियमाद्यष्टाङ्गयोग सम्पन्नापरोक्षतत्त्व साक्षात्कारि यतिवर्य श्रीमदानन्दाश्रम स्वामिविनिर्मितेन भाषानुवादेन गभीरार्थं ग्रंथिभेदकेन सहिता च साचेयम् तेनैव यतिवर्येण श्री मदानन्दाश्रम स्वामिना सूर्य प्रेस यन्त्रालये मुद्रयित्वा मुमुक्षूणामभीक्षणाय वैराग्यविवृध्यै प्रकाशिता ।

सदाचरण परायणायाः प्रातः स्मरणीय नामधेयायाः भिनगा महाराज्ञ्याः श्री श्रीमत्याः कृष्णा कुमारिकाया निदेशेन ।

# भूमिका ।



श्रीमन्महाराजाधिराज परमोदार चरित स्वर्गीय भिनगा नगराधीश्वर क्षत्रिय कुल कमल दिवाकर राजन्यवर्य कल्पद्रुमो दय प्रतापसिंह राजमहिष्या सद्धर्म निष्ठयौदार्य दान दाक्षिण्या- दि सद्गुण्य विशिष्टया भक्तिमत्या श्रीमती मुरारिकुमारि देव्यै को दण्डी सेवाश्रमः वाराणस्यांप्रतिष्ठापितः तदङ्गज श्रीमद्युव· राजवर्यस्य साहसोपहसित]कुमारस्य विद्या विनयाद्यगण्यगुण समलङ्कृतस्य श्रीमन्महेंद्र विक्रम सिंहस्य धर्म पत्न्याशेष गुण निकरालंकृतायाः श्रीमत्याः कृष्णाकुमारी देव्याः द्रव्यव्ययेन तदा- श्रमस्थेनाऽगरामण्डलान्तर्गतबाहि प्रान्तीय बम्हरौली.पत्तनवा- स्तव्य श्रीशङ्कर ज्वालाप्रसादात्मज श्रीभोलानाथ शर्मसनाढय भूसुराणाम् गृहीत सन्यासाश्रमाणाम् श्रीराणा महल पल्ली- वासिनाम् चतुः षष्ठिमठाधीश्वराणाम् दाण्डनाम् श्री१०८श्रीशि- वाश्रमाभिधयति वराणाम् पारिव्राज्ये शिष्यतामुपगतेन श्रीमदा- नन्दाश्रम स्वामिना यमिवर्येण मुमुक्षु जनोपकृतये श्रीमतीकाशी- हिन्दू विश्व विद्यालयीय प्राच्य विद्यालयीय धर्मशास्त्र प्रधाना ध्यापकानाम् राधाप्रसाद शास्त्रिणां साहय्येन च कैवल्योपनिषदः श्रीमच्छंकरानन्द स्वामि विरचित दीपिका टीकायाः भाषानुवादं कृत्वावाराणस्यां सूर्य प्रेस यन्त्रालये मुद्रयित्वा प्रकाशितः ।

यद्यत्र काचित्त्रुटिः प्रभवेत्तर्हि परगुण परमाणून् पर्वती कृत्य नित्यं निज हृदिविकसन्तः सन्ति सन्तः कियन्तः इतिन्यायेन सूरिसमर्चैःक्षन्तव्य इति ।

ह० आनन्दाश्रम स्वामिनः

# अथ मंगलाचरणम्

शरच्चन्द्र शुभ्राजु नास्यार विन्दाम् ॥
चलच्छेतहंसस्थितां शारदाम्बाम् ॥
रणत्सच्छुतिर्बल्लकी पुस्तकाढ्याम् ॥
समीडेक्वणन्नूपुराङ्घ्र्यब्ज युग्माम् ॥१॥

वहद्दानरक्तोल्लसच्छुण्ड भृङ्गम् ॥
हृदो जाड्य हन्तोऽरुणरश्मेकदन्तम् ॥
लिखन्मन्निनः धेबिपव्यूह भङ्गम् ॥
शिवाङ्कस्थमीडेमुदाभाल चन्द्रम् ॥२॥

सुरेन्द्र, भाला हतरत्नरश्मि च्छटा
प्ररोहोल्ल सितेश्वरांघ्रिः
स्कन्दे भवक्त्राम्बनिसेव्यमानः
पायान्मुदा कृष्ण कुमारि राज्ञीं ।

# शुद्धाशुद्धि-पत्रम् ।

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| मंगलाचरण | २ | चलच्छ्रेत | चलच्छ्वेत |
| १ | ८ | भगवन्त | भगवन्तं |
| १ | ११ | परात्पर | परात्परं |
| ३ | १० | कहे | कहें |
| ४ | १५ | इदानी | इदानीं |
| ७ | २ | वयस्म | वयंस्म |
| १० | १३ | देववद्देवाधिक्याद्वा | देववद्देवाभिक्याद्वा |
| ११ | ८ | विशेश | विशेष |
| १२ | ९ | शब्दाघ | शब्दाद्य |
| १३ | ३ | हाता | होता |
| १३ | २ | इयक्त | इयत्ता |
| १३ | ३ | चिदानद्न | चिदानन्द |
| १४ | १ | पच्चिदानन्द | सच्चिदानन्द |
| १६ | ५ | सर्वोत्मेत्याह | सर्वात्मेत्याह |
| १८ | १० | वतमान | वर्तमान |
| १९ | ८ | मस्मत्प्रत्यय | अस्मत्प्रत्यय |
| २० | २ | वयाख्यानमिद | व्याख्यानमिदं |
| २० | ९ | ब्रह्मा | ब्रह्म |
| २१ | ९ | ग्रथिं | ग्रन्थि |
| २१ | १० | ब्रह्मास्मीति | ब्रह्मास्मीति |
| २१ | १३ | अन्त:कारण | अन्त:करण |
| २२ | ४ | कलत: | कुत: |
| २२ | ९ | अवरण | आवरण |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| २२ | १४ | स्वाकृत्य | स्वीकृत्य |
| २३ | ८ | आशक्ो | आशय |
| २४ | ६ | काल्पत | कल्पित |
| २४ | १० | भोक्ताऽह | भोक्ताऽहं |
| २५ | १५ | जागृत | जाग्रत |
| २५ | २० | ससार | संसार |
| २८ | २ | वहा | वही |
| २८ | २ | जागृत | जाग्रत |
| २८ | १० | ह | है |
| ३२ | २ | सत्यनानादि | सत्यज्ञानादि |
| ३२ | १५ | वलक्षण्यमाह | वैलक्षण्यमाह |
| ३३ | १० | मैं हूँ | मैं है |
| ३४ | ४ | शून्य | शून्यं |
| ३५ | ४ | महतं | महतां |
| ३५ | १४ | नीशः | ईशः |
| ३८ | ६ | प्रथक् | पृथक् |
| ४० | २ | तद्व्यातिरिक्ता | तद्व्यतिरिक्त |
| ४० | ५ | निर्गुता: | निर्गता: |
| ४० | ५ | ज्योतिस्त्य: | ज्योतिराप: |
| ४० | ८ | सदसद्विहीन | सदसद्विहीनं |
| ४० | १० | शुद्ध | शुद्धं |
| ४० | ११ | परमात्मरूप | परमात्मरूप |
| ४० | १२ | स्पष्ट | स्पष्टं |
| ४३ | १२ | ह्म | ब्रह्म |

———

ॐ तत्सद्ब्रह्मणे नमः ।

# अथ कैवल्योपनिषत्

## शंकरानन्द टीका भाषानुवाद सहितः ।



ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमदुच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ १ ॥
ॐ शान्तिः शान्तिः शान्तिः ॥

कैवल्याख्योपनिषदं कैवल्यार्थवबोधिनीम् ।
व्याख्यास्ये केवलस्तेन कैवल्यात्माप्रसीदतु॥१॥

अथाश्वलायनो भगवन्तं परमेष्ठिनं परिसमेत्योवाच अधीहि भगवन्ब्रह्मविद्यां वरिष्ठां सदा सद्भिः सेव्यमानां निगूढां ययाचिरात्सर्वं पापं व्यपोह्य परात्परं पुरुषमुपैति विद्वान् ॥
भगवती श्रुतिः मातेव सुखप्रतिपत्त्यर्थं कञ्चनाश्वलायनमुररी कृत्य निमित्तीकृत्य आख्यायिकामवतारयति ब्रह्मविद्यायामास्तिक्यं जनयितुं ॥

अथ साधनचतुष्टयसंपत्यनंतरं ॥ आश्वलायनो ऋग्वेदाचार्यो भगवन्तं पूजावन्तं परमेष्ठिनं सर्वोत्कृष्टस्थाननिवासिनं परिसमेत्यशास्त्रीयेण विधिनासमीपमागत्य उवाचउक्तवान् अधीहि-मदनुग्रहार्थं स्मरभगवन् ॥ हेसमग्रधर्मज्ञान वैराग्यैश्वर्ययशः श्रीमान् ब्रह्मविद्यां ब्रह्मणो देशकालवस्तुपरिच्छेदशून्यस्य विद्याबुद्धिस्त-त्साक्षात्कारणं तांवरिष्ठां अतिशयेनश्रेष्ठां सदा-नित्यंसद्भिर्देहादिष्वात्मबुद्धिशून्यैः सेव्यमानां हृदयेध्रीयमाणां निगूढांसर्वभूतेष्वात्मनो विद्य मानत्वेन विद्यमानामप्यविद्ययानितरां संवृतां ययाब्रह्मविद्यया अचिरात् अदीर्घेणकालेनसर्वपापं निखिलदुःखकारणमज्ञानं ससंस्कारं व्यपोह्य विविधं परित्यज्यविनाश्येत्यर्थः ॥ निखिलजग-त्कारणात् हिरण्यगर्भात्परं उत्कृष्टं अज्ञानाश्र यविषयत्वाभ्यां पुरुषंपरिपूर्णम् उपैतिप्राप्नोति विद्वान्अहमेवसोस्मीतिसाक्षात्कारवान् ॥१॥

कैवल्य ब्रह्मरूप जो अर्थ उसका प्रकाश करने वाली जो कैवल्य नाम उपनिषद् उसकी व्याख्या करूँगा जिससे केवल कैवल्य स्वरूप आत्मा प्रसन्न होवें ॥ १ ॥

भगवती श्रुतिः माता के समान सुखपूर्वक ज्ञान के लिये किसी आश्वलायन ऋषि को निमित्त मान कर आख्यायिका का अवतरण कर रही है ॥ जिससे ब्रह्म विद्या में आस्तिकता पैदा होती है ॥ अथ चार साधनों की प्राप्ति के पश्चात् आश्वालायन जो ऋग्वेद के आचार्य पूजावाले उत्तम स्थान में बैठे हुए जो ब्रह्मा उनके समीप शास्त्र विधि से जाकर बोले ॥ मेरे ऊपर अनुग्रह करके ब्रह्म विद्या को कहे हे भगवन् समग्र धर्म ज्ञान वैराग्य ऐश्वर्य यशश्री इन सब गुणों से विशिष्ट आप देशकाल वस्तु परिच्छेद से शून्य जो ब्रह्म उसकी विद्या को स्मरण करे जो ब्रह्म विद्या वरिष्ठ श्रेष्ठ है देहादियों में आत्म बुद्धि से रहित विद्वानों से सेवन की जाती है अर्थात् हृदय में धारण की जाती है सब जीवों में आत्मा के होने से सब जगह में विद्या वर्तमान भी है तौ भी अविद्या से निरन्तर ढकी हुई है जिस ब्रह्म विद्या से अचिरात् बहुत जल्दी सब पापों को और उसके कारण अज्ञान तथा संस्कार से परित्याग करके सब जगत् के कारण अव्याकृत प्रकृति से परे परिपूर्ण पुरुष को वह प्राप्त होता है जो विद्वान् वह ब्रह्म में हूँ इस प्रकार का साक्षात्कार वाला है ॥ १ ॥

तस्मै स होवाच पितामहश्च श्रद्धाभक्तिध्यानयोगादवेहि । न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ॥ २ ॥

एवं पृष्टस्तस्मै स्वशिष्याय ब्रह्मविद्यार्थिने स गुरुः सर्वज्ञः । ह किल उवाचोक्तवान् ॥ पितामहश्च जगत् पितॄणां दक्षादीनां पिता पितामहः कमलासनः चकारोऽप्यर्थः स पितामहोऽप्युवाच न तूपेक्षां कृतवानित्यर्थः ब्रह्मविद्यायाः साक्षाद्वक्तुमशक्यत्वात्तदर्थस्य ब्रह्मणो वाङ्मनसातीतत्वादतः सोपायान्तरमाह श्रद्धाभक्तिध्यानयोगात् । श्रद्धा आस्तिक्यबुद्धिः । भक्तिर्भजनं तदेकतात्पर्यबुद्धिः ध्यानं विजातीय प्रत्ययशून्य सजातीयप्रत्ययप्रवाहः एतेषां योगः सम्बन्धः तत्कारणमितियावत् तस्मादवेहि-जानीहि इदानीं यथा श्रद्धाभक्तिध्यानयोगो ब्रह्मविद्यायाः कारणं तद्वत्सन्यासोऽपीत्याह न कर्मणा श्रौतेनस्मार्तेन वा न प्रजया पुत्रादिना

धनेनदैवेन मानुषेणवावित्तेन नेतिपूर्वमनुषज्यते अमृतत्वमिति वक्ष्यमाणानुषंगः कर्मप्रजाधन पदेष्वनुगन्तव्यः त्यागेन निखलश्रौतस्मार्तकर्म परित्यागेन परमहंसाश्रमरूपेण एकेमहात्मानः संप्रदायविदः ॥ अमृतत्वमविद्यादिमरणधर्म-शहित्यम् आनशुः प्राप्ताः ॥ २ ॥

ऐसा पूछने पर ब्रह्मविद्या के अर्थी तिस आश्वलायन प्रसिद्ध अपने शिष्य से वह सर्वज्ञ गुरु जगत के रचने वाले दक्ष आदिकों के पिता पितामह ब्रह्मा ने कहा, कहने में उपेक्षा नहीं की ब्रह्मविद्या साक्षात् कहने को शक्य नहीं है ॥ उसका अर्थ ब्रह्म भी वाणी और मन से अतीत है अर्थात् वाणी और मन का विषय नहीं है ॥ इस कारण भिन्न उपाय बताते हैं श्रद्धा भक्ति तथा ध्यान के योग से ब्रह्म प्राप्त होता है आस्तिक्य बुद्धि को श्रद्धा कहते हैं भजन का नाम भक्ति है उस ब्रह्म में एक तात्पर्यता बुद्धि ध्यान है विजातीय ज्ञान से रहित सजा-तीय ध्यानकी धारा ध्यान है यह फलित हुआ उनका योग अपने में सम्बन्ध करकेइन्हीं साधनों से हे शिष्य तुम ब्रह्म को जानो ॥

इस समय जिस प्रकार श्रद्धा भक्ति तथा ध्यान योग ब्रह्म विद्या में कारण है तैसेही सन्यास भी है यह कह रहे हैं।

श्रौतस्मार्त कर्म से पुत्रादि प्रजा से दैव प्राप्त और मनुष्य प्राप्त धन से अमृत रूप मोक्ष को नहीं प्राप्त करते हैं ॥ केवल श्रौतस्मार्त कर्म का परित्याग जो पारमहंस्याश्रम रूप है उससे ही अमृतत्व। अविद्या आदि मरण भाव से राहित्य को प्राप्त करते हैं। इस बात को संप्रदाय जानने वाले कोई एक महात्मा कहते हैं ॥ २ ॥

एवं कृते सन्यासे—

परेण नाकं निहितंगुहायां विभ्राजते यद्य-तयोविशन्ति वेदान्तविज्ञानसुनिश्चितार्था सन्यासयोगाद्यतयः शुद्धसत्वातेब्रह्मलोकेषु परान्त-काले परामृतात्परिमुच्यन्तिसर्वे ॥ ३ ॥

परेण परस्मात् नाकं कं सुखं तद्वि-रोधिदुःखमकं नाकं विद्यते यश्मिन्सनाकस्तं स्वर्गस्योपरीत्यर्थः । अथवा परेण परं नाक मानन्दात्मानं निहितं प्रक्षिप्तं स्वयमेवस्थितम् गुहायां बुद्धौविभ्राजते विशेषेण स्वयंप्रकाशत्वेन प्रदीप्यते यत्प्रसिद्धं विश्वव्यापिस्वरूपम् यतयः

कृतसन्यासाः प्रयत्नवन्तो ब्रह्म साक्षात्कारस-
मुत्पन्ना विशन्ति प्रविशन्ति इदं वयस्म इति
साक्षात्कारेण तदेवभवन्तीत्यर्थः यतीनांविशेष-
णान्याह ॥ वेदान्तविज्ञानसुनिश्चितार्थाः वेदा-
न्ताप्रसिद्धास्तेभ्यो जातंविज्ञानं विशिष्टं अहं
ब्रह्मास्मीतिविज्ञानं तस्मिन्नेवसुनिश्चितोर्थः प्रयो-
जनं येषांते अथवा सुनिश्चितोऽयमित्थमेवेति
सम्यगवधारितो ब्रह्मलक्षणोर्थः प्रसिद्धोयैस्ते
वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगात्
सम्यक वान्तविष्ठादिवत् लोकद्वयभोगस्य
न्यासस्त्यागः संन्यासस्तस्ययोगोहं संन्यास्य-
स्मीतिबोधस्तस्माद्यतयः । व्याख्यातम् ॥
पुनरादानं विशेषणत्वख्यापनार्थं शुद्धसत्वा शुद्धं
रागादिकषायरहितम् सत्वमन्तः करणांयेषां ते
शुद्धसत्वाः एवं भूताअपिकुतश्चित्प्रतिबन्धाद-
स्मिन्शरीरे अनुत्पन्नसाक्षात्काराश्चेत् तदा
उक्ताः यतयः ब्रह्मलोकेषुब्रह्मणकार्यस्यैक

एवल्लोकोऽनेकभूमिकाप्रासादवदधः उपर्यादि विभागेनावस्थिता बहुबचनेनाभिधीयन्ते तेषु ब्रह्मलोकेषु परान्तकाले परस्यब्रह्मण: अन्तकालो विनाशकाले। द्वितीयपराद्धविसान परान्त काल-स्तस्मिन्परामृतात् उत्कृष्टादमरणधर्मिणो व्या-कृतात्परिमुच्यन्ति परिमुच्यन्ते सर्वतोमुक्ता भवन्ति सर्वैनिखिला: ॥ ३ ॥

इस प्रकार सन्यास करने पर वह सुख और उसका विरोधी दु:ख एक नहीं है जिसमें ऐसे नाक के ऊपर अथवा सुख स्वरूप आनन्दात्मा ब्रह्म हृदय रूप गुहा में निहित स्थापित होता हुआ स्वयं प्रकाश रूप प्रकाशित होता है उस प्रसिद्ध विश्वव्यापी रूप ब्रह्म को नियमन शील प्रयत्न वाले जिन्होंने ब्रह्म साक्षात्कार किया है प्रवेश करते हैं। यह ब्रह्म हम हैं ऐसा साक्षात्कार करने से ब्रह्म ही होते हैं ॥

मंत्र में यतय: इस पद के विशेषणों को कहते हैं वेदान्त से उत्पन्न जो विज्ञान अर्थात् मैं ब्रह्म हूँ इस प्रकार विशिष्ट ज्ञान उस विज्ञान में ही निश्चय किया गया है अर्थ प्रयोजन जिनका ऐसे यति हैं। अथवा यह ऐसा ही है इस प्रकार निश्चय किया गया है। प्रसिद्ध ब्रह्मरूप अर्थ जिन्हों से वे यति

वेदान्त विज्ञान सुनिश्चितार्थ इस पद से विशेषण किये गये हैं। संन्यास योगात् । वान्त और विष्ठा के समान दोनों लोक के भोग का न्यास त्याग संन्यास है । उसका योग मैं सन्यासी हूँ इस प्रकार का जो बोध वही योग है ।।तिस योग हेतु से शुद्ध सत्वा ॥ शुद्ध रागादिकषाय रहित सत्व अन्तः करण हैं जिनके किसी प्रतिबन्ध से इस शरीर में ब्रह्म साक्षात्कार नहीं उत्पन्न हुआ तो उक्त यति सब ब्रह्म हिरण्यगर्भ के लोक में जिस लोक में अनेक प्रासाद के सदृश नीचे ऊपर भाग में से उत्तमोत्तम स्थान वर्तमान रहते हैं वे सब परब्रह्म हिरण्य गर्भ के विनाश-काल में द्वितीय परार्द्ध के अन्त में अपरामृत, उत्कृष्ट, मरण धर्म से रहित सबके सब मुक्त हो जाते हैं ॥ ३ ॥

इदानीं ब्रह्मज्ञाना वाप्त्यर्थमुपासना कर्तु रुपवेशनार्थं देश विशेषादिक माह ।

विविक्त देशे च सुखासनस्थः शुचिः समग्रीव शिरः शरीरः । अत्याश्रमस्थः सकलेंद्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य ॥ हृत्पुण्डरीकंविरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकं ॥ ४ ॥

विविक्त देशेतिः—

विविक्त देशे चैकान्त देशे चशब्दाद
व्याकुल कालेपि सुखासनस्थः। सुखमनुद्वेगकरं
दर्भाद्यासनं सुखासनं तस्मिं स्तिष्ठतीति सुखा
सनस्थः। शुचिः वहिरन्तः शौचवान् ॥ सम-
ग्रीव शिरः शरीरः समानिग्रीवाच शिरश्च शरीरं
च यस्य स समग्रीवशिरःशरीरः ऋजुकायः
पद्माकाद्यासनस्थ इत्यर्थः। अत्या श्रमस्थः
अत्यधिकः व्रह्मचारिग्रहस्थ वानप्रस्थ कुटीचक
वहूदकहं सेभ्यः आश्रमः परमहंसस्य लक्षणं
तस्मिस्तिष्ठ तीत्याश्रमस्थः सकलेन्द्रियाणि नि-
खिलानि समनस्कानि ज्ञान कर्मेंद्रियाणि निरु-
ध्य स्वस्व प्रचारेभ्योऽवरुध्य भक्त्यादेववदे वा-
वधिक्याद्वा स्वगुरुं स्वस्यगुरुं तत्वमसीत्यर्थंस्या-
वबोधकं प्रणम्य प्रकर्षेणनत्वा

अनन्तरं

हृत्पुण्डरी कमिति—हृत्पुण्डरीकं हृत्क-

मलं पञ्चछिद्रादि विशेषणं ॥ विरजं विरजस्कं अपगत रागद्वेशादिकं विचिन्त्य विशेषेणध्यात्वा मध्ये हृत्पुण्डरीकस्यान्तः विशदं निर्मलं शुद्ध-स्फटिकसंकाशमित्यर्थः विशोकं विगतशोकं विगतशोक जदुःखंविशोकं ॥ आनन्दपूर्णं हृदय स्मितान नंचेत्यर्थः ॥ ४ ॥

इस समय ब्रह्म ज्ञान की प्राप्ति के लिये उपासना करने के देश विदेश को कहते हैं।

एकान्त देश में सुखासन पर बैठा हुआ ॥ यहाँ एकान्त देश से अव्याकुल काल का भी ग्रहण करना चाहिये उद्वेगन करने वाला जो सुखासन उस पर स्थित हुआ जो पुरुष शुचिः बाहर भीतर पवित्र सरल सीधा शरीर समान गर्दन और शिर है जिसका ऐसा ब्रह्मचारी गृहस्थ वानप्रस्थ कुटीचक बहूदक हंस इन आश्रमों से परमहंस लक्षण रूप आश्रम अत्याश्रम सर्व श्रेष्ठ आश्रम है उसमें स्थित रहने वाला अत्याश्रम कहा जाता है। मन के सहित सम्पूर्ण कर्मेन्द्रिय और ज्ञानेन्द्रिय को अपने अपने विषयों में जो प्रचार उससे रोक कर भक्ति के साथ देव के समान व देव से अधिक तत्वमसि इस महा वाक्य के अर्थ का बोध कराने वाले अपने गुरु को जान कर और प्रणाम करके सुखासन पर बैठे तिसके बाद ॥ हृत्पुण्डरीकं हृदय कमल जो

पांच छिद्रों से युक्त है ॥ विरजं रागद्वेशादि रहित है विशुद्धं नष्ट हो गया है समस्त दुःख आदि दोष जिसमें ऐसे हृदय के मध्य में विषद् निर्मल शुद्ध स्फटिक के समान विशोक दुःख रहित आनन्द से भरा हुआ हृदय जिसका कुछ विहसित मुख इस प्रकार सगुण रूप ब्रह्म का ध्यान करै ॥ ४ ॥

अचिन्त्य मव्यक्तम नन्तरूपं शिवं प्रशान्त ममृतं ब्रह्मयोनिं ॥ ५ ॥

वस्तुतस्तु अचिन्त्यम् वाङ्मनसातीत त्वेहेतुः । अव्यक्तम् शब्दाद्य शेष शून्य त्वाद स्पष्टम् व्यक्तम् असत्वं परिच्छेदंच वारयति अनन्तरूपं नविद्यतेऽन्तइयत्ता रूपाणां यस्य सोऽनन्तरूपं देशकालवस्तु परिच्छेद शून्यम् वाऽनन्त रूपं शिवं मंगलरूपं प्रशान्तं अविद्या-दोषरहितम् अमृतं कालत्रया संस्पष्टं अमृत वद्वा निरतिशयानन्द रूपत्वेन ब्रह्म बृहत्सर्वं सर्वस्माद प्यधिकम् योनि जगज्जन्मादिकारणम् ॥ ५ ॥

ब्रह्म परमात्मा वेद का योनि कारण है अचिन्त्यं वाणी और

मनका विषय न होने से ज्ञान के प्रवाह का अविषय है ॥ अव्यक्तम् शब्दादि संपूर्ण विषय विशेष से शून्य होने के कारण स्पष्ट नहीं होता परन्तु मान रहित है व्यक्त नहीं है जिसके रूपों का देश काल वस्तु परिच्छेद से रहित है ॥ शिवं मगल रूप है ॥ प्रशान्त अविद्या दोष से रहित है अनन्तं तीनों काल में जिसको स्पर्श नहीं है । ब्रह्म बड़ा सबसे अधिक है योनि जगत के जन्म पालन और नाश का कारण है ॥ ५ ॥

तथा दिमध्यान्त विहीन मेकं विभुंचिदानन्द मरूपमद्भुतं ॥ ६ ॥

तथा दीति—तथा यथैद्विशेषण जातं तद्वत्स्वरूपमपि आदि मध्यान्त विहीनं उत्पत्ति परिच्छेद विनाश वर्जितं तत्रहेतुः ॥ एकं द्वितीय वस्तु रहितं विभुंसमर्थं व्यापिनंवा चिदानन्द स्वयं प्रकाशमानं निरतिशयानन्दं अरूपं चिदानन्द व्यतिरिक्त रूप रहितं ॥ ततोऽद्भुत माश्चर्यकरं ॥ ६ ॥

तैसेही आदिमध्य और अन्त से बिहीन है । उत्पत्ति परिच्छेद विनाश से वर्जित है ॥ एक अद्वितीम है वस्तु मात्र से रहित है ॥ विभु समर्थ और व्यापी है चिदानन्द स्वयं

प्रकाशमान निरतिशयानन्द रूप है ॥ अरु पचिदानन्द के सिवाय दूसरा रूप नहीं है तिस कारण से अद्भुत आश्चार्य रूप है ऐसे परमात्मा को ध्यान करके मुनि लोग अज्ञान से परे ब्रह्म को प्राप्त होते हैं ॥ इस प्रकार सातवें मन्त्र के साथ सम्बन्ध जानना ॥ ६ ॥

उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकराठं प्रशान्तं ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्त साक्षिं तमसः परस्तात् ॥ ७ ॥

समस्त साक्षिं सर्वसाक्षिणाम् इकारान्तः शाक्षि शब्दश्छांदसः उमा सहायं उमा ब्रह्मविद्या भवानी वा सहायः अर्द्धनारीश्वरत्वेन वामाङ्ग स्थितानुरूप युवतिरूपत्वेन वा यस्य स उमासहायः तं परमेश्वरं उत्कृष्टं ब्रह्मादि नियन्तारं प्रभुं समर्थं त्रिलोचनं त्रीणि सोम सूर्याग्न्यात्मकानि लोचनानि यस्य स त्रिलोचनस्तं नीलकराठं कृष्णाकराठं प्रशान्तं प्रसन्न वदनेन्द्रियं ध्यात्वेति ॥ ध्यात्वा प्रत्यय प्रवाहेण साक्षात्कृत्य ॥ मुनिर्मननशीलः प्राप्नोति गच्छति

भूत योनिमाकाशादि महाभूत कारणं तर्हि किं कारणत्वोपाधिकमित्या शंक्यऽऽह समस्त साक्षिं सर्व साक्षिणं सर्व बुद्धि प्रचार द्रष्टारं साक्षित्वमपि न केवलस्येत्य आह तमसः आवरण विक्षेप शक्ति रूपाया अविद्यायाः परस्तात् परतोऽविद्या सम्बन्ध शून्य इत्यर्थः॥७॥

समस्त साक्षिं यहां पर साक्षि शब्द ह्रस्व इकारान्त छांदस जानना॥ वह ईश्वर सबका साक्षी है ॥. उमा ब्रह्म विद्या सहायक कामादि चोर से रक्षक है जिसके अर्धनारी शरीर होने के कारण अनुपम युवती भवानी वाम अंग में है जिसके परमेश्वर उत्कृष्ट ब्रह्मा आदि देवों का नियम न करने वाला प्रभु समर्थ है त्रिलोचनं सोम सूर्य अग्नि तीन नेत्र हैं जिसके॥ नीलकण्ठं श्यामकण्ठ है जिसका प्रशान्तं प्रसन्न मुख और इन्द्रिय हैं जिसकी॥ ऐसे ब्रह्म को साक्षात् करके विचारशील मुनि आकाशादि भूतों का कारण त्वोपाधिक नहीं है समस्त साक्षिं सम्पूर्ण बुद्धि की गति का द्रष्टा है। केवल साक्षित्व ही नहीं है किंतु आवरण और विक्षेप शक्ति वाली जो अविद्या उससे परे अर्थात् अविद्या सम्बन्ध से शून्य है॥ ७॥

स ब्रह्मा स शिवः सेन्द्रः सोक्षरः परमः

स्वराट् स एव विष्णुः स प्राणः स कालाग्निः स चन्द्रमा ॥ ८ ॥

सेन्द्रः स इन्द्रः छांदसः संधिः ॥ उमा सहायो पासनान्तः प्राप्नोत्यविद्यायां विद्या-दशायां सर्वोत्मेत्याह स उक्तः ब्रह्मा प्रथम शरीरी कार्य कारण भूतः स उक्तः शिवः उमा सहायः सेन्द्रः स उक्तः इन्द्रः त्रिलोकीपतिः स उक्तः अक्षरः विनाश रहितः परम उत्कृष्टः स्वराट् अन्यानपेक्ष स्वेन स्वयमेव राजत इति स्वराट् स एवोक्त एव विष्णुः व्यापन शीलः शंख चक्र गदाधरः स उक्तः प्राणः प्राणादि पञ्च वृत्ति रूपः स उक्तः कालाग्निः कालरूप वैश्वानरः स उक्त श्चन्द्रमा शशाङ्कः ॥ ८ ॥

उपासना के द्वारा अविद्या से रहित विद्या के प्राप्त होने पर सर्वात्मा ब्रह्म प्राप्ति के योग्य हैं ॥ यही बात इस मन्त्र में कहा जाता है ॥ प्रथम शरीरी कार्य कारण रूप ब्रह्म जो कहे गये हैं ॥ वही शिव रूप जो उमा के पति हैं ॥ वही इन्द्राणी के पति इन्द्र हैं । वही त्रिलोकी पति कहे जाते हैं वही स्वराट् अन्यकी

अपेक्षा न करके अपने स्वरूप से जो शोभित होते हैं विष्णु व्यापन शील हैं शंख चक्र गदा पद्म को धारण किये हुए हैं प्राण अपान समान उदान व्यान ये पांच वृत्ति वाला प्राण भी उसी का रूप है कालाग्नि काल रूपी अग्नि भी वही हैं चन्द्रमा भी वही परमात्मा है। इस प्रकार सर्व रूप परमात्मा है ॥ ८ ॥

स एव सर्वं यद्भूतं यच्च भाव्यं सनातनं
ज्ञात्वा तं मृत्यु मत्येति नान्यः पन्था विमुक्तये ॥ ९ ॥

सएवेति ॥ सएव उक्तएव सर्वं निखिलं यत्प्रसिद्धं भूतमतीतं यच्च यदपि भाव्यं भावि चकाराद्भूतं मानमपि सनातनं चिरन्तनं ज्ञात्वाऽहं ब्रह्मास्मीति साक्षात्कृत्यैत मुक्त मानन्दात्मानं मृत्युमविद्यां ससंस्कारामत्येति अतीत्य गच्छति ॥ नान्य उक्ताद्ब्रह्मज्ञानात् व्यतिरिक्तः पन्थामार्गः विमुक्तये विमुक्त्यर्थं नास्तीतिशेषः ॥ यद्वा त्रयाणां विश्वतैजस प्राज्ञानां विराड्हिरण्य गर्भेश्वराणां वास्वयं प्रकाशत्वेन लोचनं प्रकाश स्वरूपं त्रिलोचनं नीलकण्ठं नीलं तमोऽज्ञानं कण्ठे कण्ठवच्चिदेक देशेऽधिक व्याप्तिमत्त्वेन

चैतन्यस्यवर्तते यस्य स नीलकण्ठस्तमिति व्याख्यातं तथा विशदमविद्यारहितं ॥ विशोकं दुःख संस्कार रहितं ॥ उमासहायं ब्रह्म विद्या सहायं ॥ प्रशान्तं पुनरुत्थान संस्कार वर्जितमिति निर्गुण परत्वेन समग्र वाक्यम व गन्तव्य निर्गुणस्याप्युपलब्धत्वेन हृदय प्रदेश मध्यस्थत्वमविरुद्ध तथा च ध्यात्वा मनन निदध्यासन कृत्वेत्येतदुपपन्नमेव ॥ ६ ॥

जो कुछ जगत में प्रसिद्ध है वह सब ब्रह्म है भूत भविष्यत् वतमान तीनों काल ब्रह्म ही का रूप है उस सनातन ब्रह्मको मैं ब्रह्म हूँ इस प्रकार जान कर संस्कार के सहित अविद्या रूप मृत्यु को तर कर पार चला जाता है उक्त ब्रह्म विज्ञान से भिन्न कोई मार्ग दूसरा विमुक्ति के लिये नहीं है यहां रूप्तम से नवम मंत्र तक कितने पदों का व्याख्यान पुनः कर रहे हैं ॥ विश्वतैजसप्राज्ञ तथा विराड् हिरण्य गर्भ ईश्वर इनको स्वयं प्रकाश रूप होने से त्रिलोचन यह तीनों स्वयं प्रकाश स्वरूप हैं यह अर्थ हुआ ॥ नील पद से अज्ञान का ग्रहण है वह ज्ञान के एक देश में कण्ठ में जैसा वैसा व्याप्तहो करके है जिसके विषदं अविद्या रहित है विशोकं दुःख संस्कार से रहित हैं उमासहायं ब्रह्म विद्या सहायक है । जिसके प्रशान्तं अभ्युदय

के संस्कार से रहित है इस प्रकार निर्गुण ब्रह्मपरक इन पदों की व्याख्या करते हैं ॥ ध्यात्वा उसको मनन निद ध्यासन करके इस प्रकार ध्यात्वा ज्ञात्वा पद की व्याख्या निर्गुण ब्रह्म में बन सकती है ॥ ६ ॥

सर्वं भूतस्थ मात्मानं सर्वं भूतानि चात्म निसंपश्यन्ब्रह्म परमं याति नान्येन हेतुना ॥१०॥

सर्वं भूतस्थ निखिले षुस्थाः वर जङ्गमेषु तिष्ठतीति सर्वं भूतस्थस्तमात्मानं मस्मत्प्रत्य ययोग्यं सर्वा भूतानि च निखिलानि स्थावर जङ्गमानि सर्वा भूतानि चकार आधा राधेय भाव व्युत्क्रमार्थः ॥ आत्मनि आनन्दात्मन्यहं प्रत्ययोग्ये संपश्यन्सम्यक् संशय विपर्यय मन्तरेणावलोकयन् ब्रह्म बृहद्देश काल वस्तु परिच्छेद शून्यं परम उत्कृष्ट मनुपचरितं मित्यर्थः याति प्राप्नोति नयातीति देहली दीपन्यायेन संबध्यते नयाति न प्राप्नोति अन्येन उक्तबोध व्यतिरिक्तेन हेतुना कारणेन ॥ १० ॥

ध्यात्वा गच्छतीत्यस्य व्याख्यानं ज्ञात्वात

मित्यादि ॥ नान्यः पन्था विमुक्तये इत्यस्य व्याख्यानंमिदसर्वं भूतस्थ मित्यादि ॥ यदात्वेवं ज्ञानंनो त्पद्यते तदा तदुपादाने उपाय माह

सर्वं भूतस्थ ॥ सम्पूर्ण स्थावर जङ्गम में जो विद्यमान है आत्मानं हमारे ज्ञान और व्यवहार के योग्य ॥ सर्वं भूतानि सम्पूर्ण स्थावर जङ्गम को जिसने रचा एक बार सबको रचने सें आधारा धेय का क्रम नहीं है यह अर्थ प्रतीत होता है ॥ अहं प्रत्यय योग्य आनन्दात्मा में संशय विपर्यय के बिना ॥ संपश्यन् ॥ ज्ञान को प्राप्त करता हुआ ब्रह्म वृहत् देश काल वस्तु से जो परिच्छेद उससे शून्य परम उत्कृष्ट ॥ अनुपचरित है । अर्थात् मुख्य उत्कृष्ट है ऐसा जो ब्रह्म उसको प्राप्त होता है और कोई हेतु से प्राप्त नहीं होता ॥ १० ॥

ध्यात्वा गच्छति इसका व्याख्या ज्ञात्वातं इत्यादि जानना नान्यः पन्था विमुक्तये इसका व्याख्या सर्वं भूतस्थं इत्यादि जानना ॥ जब इस प्रकार ज्ञान उत्पन्न न हो तब उसके पैदा करने में उपाय कहते हैं ॥

आत्मानमरणिं कृत्वा प्रणवं चोत्तरा-
रणिं ॥ ज्ञान निर्मथनाभ्यासात्पाशं दहति
पण्डितः ॥ ११ ॥

आत्मानमन्तः करणं अरणिं वन्हि जनकं

मन्त्र संस्कृतं काष्ठं कृत्वाऽधोविधायाऽधरारणि त्वेन चिन्तयेत्यर्थः प्रणवं ॐकार मुत्तरारणिं उत्तरारणिमपि चकार कृत्वेत्येतदनु वृत्यर्थः॥ ज्ञाननिर्मंथनाभ्यासात् ज्ञानस्य सर्वात्मकोऽह-मस्मीत्येवं रूपस्य निर्मंथनं युक्ति भिर्विलोडनं तस्याभ्यास आवृत्तिरूपो ज्ञान निर्मथनाभ्यास स्तस्मा दुत्पन्नेनाहं ब्रह्मास्मीति साक्षात्कारा-ग्निना पाशं आत्मनो बन्धनरूपमज्ञानं रज्जु रचित महं ममादि ग्रंथिं दहति भस्मीकरोति पण्डितः पण्डाहं ब्रह्मास्मीति बुद्धिस्तामितः प्राप्तः पण्डितः॥ ११॥

आत्मानं—अन्तः

कारण को अग्नि पैदा करने वाला मन्त्र संस्कृत अरणि काष्ठ बना कर अर्थात नीचे की अरणि चिन्तन कर ॐकार को ऊपर की अरणि चिन्तन कर॥ सर्व मय मैं हूँ इस प्रकार ज्ञान रूप मथानी के अभ्यास से विद्वान् लोग॥ मैं ब्रह्म हूँ इस प्रकार साक्षात्कार रूप अग्नि से अपने पाशको [अज्ञानरूपी रस्सी से बनाया हुआ मैं मेरा इस ग्रन्थिको दहति भस्म करतेहैं॥ पण्डा।

अहं ब्रह्मास्मि इस बुद्धि का नाम है उसको जो प्राप्त हो वह पण्डित है ॥ ११ ॥

नन्वस्यासंगोदासो नस्या द्वितीयस्य क्व्रतः संसारः पाशरूप इत्यतआह

सएव मायापरि मोहितात्मा शरीर मास्थाय करोति सर्वं स्त्रियान्नपानादि विचित्र भोगैः सएव जाग्रत्परितृप्ति मेति ॥ १२ ॥

सएवोक्तोऽसंगोदासीन एवनत्वन्यः माया परिमोहितात्मा मायाअविद्याअवरण विक्षेप करी शक्तिः तया परिमोहितोऽऽत्मास्वयं प्रकाश आनन्दात्मा स्वस्वरूपोयः समाया परिमोहितात्मा शरीरं स्थूलादि भेद भिन्न मनुष्यादि कलेवर मास्थायोहं मनुष्य इत्याद्यभिमानेना समन्तात्स्वाकृत्य करोति सर्वं निखिल व्यापार जातं कुरुते स्त्रियान्न पानादि बिचित्र भोगैः स्त्रियोमनोऽनुकूला युवतयोऽन्नपाने मनोऽनुकूले आदि शब्देन वसनाच्छादनादीनि

मनोऽनुकूलानितैः स्त्रियान्नपाना दिभिर्विचित्र भोगैः स्त्रियेतिच्छादसः सएव माया परिमूढ एवनरवन्यः जाग्रज्जागरण मिन्द्रियै वाह्य विषयोपलब्धि रूपं कुर्वन्परितृप्तिं सर्वतो विषय सुखजा तृप्तिमेति गच्छति सुख दुखं च प्राप्नोतीत्यर्थः ॥ १२ ॥

असंग उदासीन अद्वितीय आत्मा को पाशरूप संसार किस तरह से होगा इस आशङ्को को चित्त में रख कर कहते हैं।

सएवेति ॥ वही असंग उदासीन अद्वितीय आत्मा दूसरा नहीं माया परि मोहितात्मा ॥ माया अविद्या आवरण तथा विक्षेप करने वाली शक्ति तिससे परि मोहित है आत्मा स्वयं प्रकाश आनन्दात्म स्वरूप जिसके वह स्थूल सूक्ष्म कारण इन तीन भेदों से भिन्न मनुष्यादि शरीर का आश्रय लेकर मैं मनुष्य हूँ इस अभिमान को सर्वतः अपने में स्वीकार कर सम्पूर्ण व्यापारों को करता है स्त्री मन के अनुकूल युवति अन्न पानादि से आसन आच्छादन जो मनके अनुकूल हैं उनसे वही माया परिमूढ़ जीव ही दूसरा नहीं जागृत इन्द्रियों से वाह्य विषय का ज्ञान करना जो जागरण उसको प्राप्त होता हुआ परि तृप्ति सब जगह में विषय सुख से उत्पन्न तृप्ति है अर्थात् सुख दुःख

को प्राप्त होता है संसारिक तृप्ति को दुःख से मिश्रित होने से दुःख रूप भी कहते हैं ॥ १२ ॥

इदानीं स्वप्नसुषुप्त्यो विक्षेपतदभावकथनेन संसार मोक्षयो रर्थाद्दृष्टान्तमाह ।

स्वप्नेसजीवः सुखदुःखभोक्ता स्वमायया कल्पित जीवलोके ॥ सुषुप्ति काले सकले विलीनेतमोऽभिभूतः सुखरूपमति ॥१३॥

स्वप्नेइन्द्रिय ग्रामोपरमरूपायां स्वप्नावस्थायां सजीवः प्राणानां धारयिता विविधविषय वासनावासितः सुखदुःखभोक्ताऽहं सुख्यहं दुःखी येवंरूप प्रत्ययवान् सुखदुःखभोक्ता ॥ तत्रसंसारस्य दृष्टान्तेन बास्तवत्वं वारयति ॥ स्वमायया स्वस्यतत्तद्देहाभिमानिनो माया अज्ञानं विपरीतज्ञानं च तथा कल्पितंविश्वलोके कल्पितेवासनारूपे विश्वस्मिन् रथरथयोग पन्थादिक निखिल भुवने लोके बने जने च कल्पित विश्वलोके स्वप्ने यथा तद्वज्जागरेपि-

त्यर्थः ॥ सुषुप्तिकाले आनन्द भोगावसरे सकले निखिले विलीने विशेष विज्ञाने स्वका- रणाज्ञयंगते एतावान् सुषुप्तौ मोक्षेच समोन्यायः ॥ कोविशेषः ॥ इयांस्तु विशेषः । तमोऽभिभूत अज्ञानावृतः सुखरूपं स्वप्रकाशमान मानन्दात्म स्वरूपमेति गच्छति ॥ १३ ॥

अपनी माया अपने अज्ञान से रचा हुआ जीव लोक में जीव सुख दुःख का भोक्ता है । इस प्रकार पदों का परस्पर सम्बन्ध करना चाहिये ॥ सम्पूर्ण जगत के लीन होने पर तमोऽ भिभूत: अज्ञान से आवृत होकर सुख पूर्वक सोता है संक्षेप से इस मन्त्र की व्याख्या कर दी गई इदानीं यहां से आरम्भ कर विशेष रूप से व्याख्या करते हैं ॥ इस समय स्वप्न और सुषुप्ति अवस्था में विक्षेप तथा विक्षेप का अभाव इन दोनों को कहने से ॥ अर्थात् संसार और मोक्ष में दृष्टान्त कहते हैं ॥ वह जागृत अवस्था वाला जीव इन्द्रिय समूह के व्यापार से निवृत्ति रूप स्वप्नावस्था में जैसे भोक्ता है जीव बुद्धीन्द्रिय का धारण करने वाला अनेक वासनाओं से वासित प्रसिद्ध सुख दुःख का भोक्ता है ॥ मैं सुखी हैं। मैं दुःखी हैं। इस प्रकार का अनुभव ज्ञान जीव को सुख दुःख का भोक्ता बताता है संसार दशा में जो दृष्टान्त स्वप्न का दिया गया है वह ससार के वास्तविकत्व

को धारण करता है इसको स्वभाव या कल्पित जीव लोके इस पद से उपादान करते हैं उन दो देहों के अभिमानी जीव की अपनी जो माया अज्ञान व विपरीत ज्ञान उससे कल्पित वासना रूप सम्पूर्ण रथ रथ योग पथ आदिक समस्त लोक अथवा सब जन के होने पर सुख दुःख का भोगने वाला जिस प्रकार स्वप्न में है वैसे ही जागरण में भी है ॥ सुषुप्ति काल में आनन्द भोग के अवसर पर सब संसार और विशेष विज्ञान अपने कारण में विलीन होने पर अज्ञान से आवृत्त होकर स्वयं प्रकाश आनन्द रूप अपने स्वरूप को प्राप्त होता है ॥ अपने कारण में सब संसार का लय होना इतना अंश सुषुप्ति और मोक्ष में समान है। मोक्ष में ज्ञान से और सुषुप्ति में अज्ञान से आवृत होता है इतना विशेष है ॥ १३ ॥

पुनश्च जन्मान्तर कर्म योगात्सएवजीवः स्वपिति प्रबुद्धः पुरत्रये क्रीडति यश्च जीवस्त तस्तु जातं सकलं विचित्रं आधार मानन्द अखंड बोधं यस्मिंल्लयं याति पुरत्रयं च ॥ १४ ॥

पुनश्चेति ॥ पुनश्चाऽऽनंदात्मस्वरूपं प्राप्य भूयोपि जन्मान्तर कर्मयोगात्प्राग्भावीय कर्मानुरागात् स एवाऽऽनन्दात्मस्वरूपं प्राप्त एव सुषुप्तिं गतो न त्वन्योजीवः प्राणधारकः

स्वपिति स्वप्नावस्थानं गच्छति सुषुप्त्यवस्थानात् अथवा प्रबुद्धः प्रबोधं जागरणं प्राप्तो भवती-तिशेषः ॥ इदानीं जीव ब्रह्मणोरैक्यमाह पुर-त्रयेस्थूल सूक्ष्माऽज्ञानाख्ये शरीरत्रये क्रीड़ति विहरति यश्च जीवः ॥ चकारएवकारार्थः प्रसिद्धः परमात्मैव प्राणधारकः ततस्तु तस्मा देव जीवाभिन्नो नत्वन्यः ॥ तस्माज्जात मुत्प-न्नं सकलं निखिलं विविधं विचित्र कर्मनाम रूप विश्वं आधार रज्जुरिव सर्पं धारावली वर्द मूत्रितत्वादेः सकलस्य विश्वस्य आधारभूतं आनन्दं निरतिशयानन्द स्वरूपं अखण्ड बोध-मानन्दरूपत्वेति ॥ स्वयं प्रकाशैकस्वभावं यस्मिन्नखंड बोधेलयं विनाशंयाति गच्छति ॥ पुरत्रयं च व्याख्यातं च शब्दादन्यदपि ॥१४॥

जब जीव जाग कर स्वप्न से उठता है तो विश्व तैजस प्राज्ञ इनसे मानी हुई तीन अवस्था रूप तीन पुरों में जीव से सम्पूर्ण नाना प्रकार का संसार होता है । इन तीन पुरों में जीव क्रीड़ा करता है । अखण्ड बोध आनन्दरूप ब्रह्म आधार है

जिसमें ये तीनों पुर बिलीन होते हैं जन्मान्तर कर्म्म के सम्बन्ध से वह। जीव जो जागृत में सुख दुःख का भोक्ता है वह सुषुप्ति में आनन्द स्वरूप को प्राप्त होता है दूसरा नहीं सुषुप्ति अवस्था से कभी स्वप्नावस्था में कभी जागरण अवस्था में आता है। यश्च यहां चकार एवके अर्थ में है जो जीव प्रसिद्ध परमात्मा रूप ही है जीव से अभिन्न परमात्मा से ही संसार उत्पन्न हुआ दूसरे से नहीं जिस प्रकार रस्सी सर्प पानी की धारा वली वर्द का मूत्रितादि सकल संसार का आधार है।

उसी प्रकार ब्रह्म सबका आधार है। निरतिशयआनन्द स्वरूप अखण्ड बोध एक स्वयं प्रकाश स्वभाव ह ॥ जिसमें तीनों पुर लय को प्राप्त होते हैं ॥ च शब्द से अन्य समस्त संसार भी लय को प्राप्त होता है ॥ १४ ॥

एतस्माज्जायते प्राणोमनः सर्वेंद्रियाणि च ॥ खंवायुर्जोति रापश्च पृथिवी विश्वस्यधारिणी ॥ १५ ॥ एतस्मात्पुरत्रया धिष्ठानाद्बुद्धेर्द्रष्टुर्जायते उत्पद्यते

प्राणः क्रिया शक्तिः मनोऽन्तः करणं ज्ञान शक्तिः ॥ सर्वेन्द्रियाणि च सर्वं ज्ञान कर्मेन्द्रियाण्यपि च शब्दाद्देह दिक मपिखं

नभः शब्द गुणावत् वायुर्नभस्वान् ज्योतिः तेजो धातुः आपः नीराणि पृथिवी भूमिः विश्वस्य निखिलस्य स्थावर जंगमात्म कस्यप्राणि जातस्य धारिणी विश्वधारिणी ॥ १५ ॥

इस तुरीय अवस्था वाले ब्रह्म से प्राणा दिसब उत्पन्न होते हैं ॥ यह अर्थ इस मन्त्र का संक्षिप्त है ॥ अब बिस्तार से आरम्भ करते हैं ॥ एतस्मादिति ॥ इस पुरत्रय का अधिष्ठान तथा बुद्धि का साक्षी ब्रह्म से प्राण क्रिया शक्ति वाला वायु उत्पन्न होता है ॥ मन ज्ञान शक्ति वाला अन्तःकरण सम्पूर्ण कर्मेंद्रिय ज्ञानेंद्रिय और च शब्द से देहादिक भी उत्पन्न होते हैं आकाश वायु तेज जल स्थावर जंगम तथा प्राणि समूहके धारण करने वाली पृथिवी ये सब वस्तुयें उत्पन्न होते हैं ॥ १५ ॥

इदानीं महावाक्यार्थ माह

यत्परं ब्रह्म सर्वात्मा विश्वस्याय तनं महत् सूक्ष्मात्सूक्ष्म तरं नित्यं तत्वमेव त्वमेव-तत् ॥ १६ ॥

यत्प्रसिद्धं उत्कृष्टं पर ब्रह्म बृहद्देश काल बस्तु परिच्छेद शून्यं सर्वात्मा सर्वप्राणिस्थितः

स्वी नन्यश्च विश्वस्य सर्वस्य कार्यकारण जातस्या यतनं आधार भूतं महत्प्रौढं सर्वाधारत्वेनैव सूक्ष्मा दणु परिमाणात् सूक्ष्मतरं महद्व्यतिशये नाणुः नित्यं विनाश शून्यं तदुक्तं परं ब्रह्म त्वमेव तद्वगं तैवनत्वन्यत् ॥ ननु तन्मत्तोऽन्यदहं तस्मादन्यः मयि कर्तृत्वादि विशेषो पलम्भादित्यत आह ॥ त्वमेवतत् त्वं-कर्ता भोक्ताऽविद्यया वस्तुतः परं ब्रह्मैवन त्वन्यः ॥ १६ ॥

अब जीव ब्रह्म का अभेद बोधन करते हैं ॥ आप ब्रह्म ही हैं आपका और ब्रह्म का भेद नहीं है अब इस समय महा वाक्य का अर्थ कहते हैं यत्पर ब्रह्म जो प्रसिद्ध पर उत्कृष्ट बृहत् देश काल वस्तु परिच्छेद शून्य सब प्राणियों के हृदय में वर्तमान सर्व रूप सम्पूर्ण कार्य कारण समूह का आधार महत्प्रौढ़ सर्व का आधार होने से बलिष्ट सूक्ष्म से सूक्ष्म नित्य विनाश शून्य जो पर ब्रह्म वह आप ही हैं वह ब्रह्म ज्ञातृ स्वरूप हैं अन्य नहीं

ननु शंका होती है ब्रह्म में कर्तृत्वादि धर्म नहीं हैं और मेरे में कर्तृत्वादि धर्म हैं इसलिये भेद है । समाधान करते हैं ॥ अविद्या से जीव कर्ता भोक्ता है वास्तव में ब्रह्म रूप ही है दूसरा नहीं है ॥ १६ ॥

इदानीमेवज्ञाने फल माह ॥ जाग्रत्स्वप्न सुषुप्त्यादि प्रपञ्चं यत्प्रकाशते तद्ब्रह्माहमिति ज्ञात्वासर्वबन्धैप्र मुच्यते ॥ १७ ॥

जागृत्स्वप्नेति ॥ जाग्रत्स्वप्न सुषुप्त्यादि प्रपञ्चं ॥ जाग्रत्स्वप्न सुषुप्तयउक्तास्तदादयो विश्व विराडादयोस्ते एव प्रपञ्चो जाग्रत्स्वप्न सुषुप्त्यादि प्रपञ्चस्तं यत्प्रसिद्धं स्वयं प्रकाशते । प्रकाशयति तदुक्तं स्वयं प्रकाशं ब्रह्म सत्य ज्ञानादि लक्षणं अह ब्रह्मावगान्ता चिदानन्दात्मा इत्थनेन प्रकारेण ज्ञात्वा साक्षात्कृत्य सर्वा बन्धैः निखल बन्धै रहममाद्यै रेवसकारणैः प्रमुच्यते प्रकर्षेणमुक्तोभवतीति । १७ ॥

इस समय ज्ञानका फल कहते हैं प्रपञ्चं यह पद छान्दस नपुंसक है ॥ अन्यथा प्रपञ्चो ग्रन्थ विस्तरः इस जगह प्रपञ्च शब्द पुल्लिग देखा गया है इसलिये यहां भी पुल्लिंग ही उचित है परन्तु छान्दस होने से नपुंसक हो गया ॥ ब्रह्म और जीव के अभेद ज्ञान में इस समय फल कहते हैं ॥ जाग्रत स्वप्न सुषुप्ति ये तीन अवस्थायें ॥ विश्व तैजस प्राज्ञ ॥ विराड हिरण्य गर्भ

ईश्वर यह सब प्रपञ्च प्रसिद्ध जो प्रकाशित हो रहा है वह सब सत्य ज्ञानादि रूप ब्रह्म ही है और ब्रह्म मैं हूं इस प्रकार मैं मेरा इत्यादि कारण सहित बन्धनों से अत्यन्त छूट जाता है ॥१७॥

इदानीं सर्व प्रपञ्चाद्वैलक्षण्य माह ॥

त्रिषुधामसुयद्भोग्यं भोक्ता भोगश्च यद्भवेत्
तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहंसदा-
शिवः ॥ १८ ॥

त्रिषुधामस्विति त्रिषु जागरण स्वप्न सुषुप्तिषु धामसुस्थानेषु यत्प्रसिद्धं भोग्यं स्थूल प्रविवक्तानन्द स्वरूपं ॥ भोक्ता विश्व तैजस प्राज्ञाख्यः भोगश्च स्थूल प्रविविक्तानन्द भोगोपि च शब्दा दपि देवा दिवि भोगोपि यद्यथोक्तं त्रिधाम भोग्यादि प्रपञ्च जातं भवेत्स्यात्स्पष्टं तेभ्यस्त्रिधामादिभ्यो विलक्षणः विपरीत लक्षणः वैलक्षण्यमाह साक्षी स्वाध्यस्तस्य विश्वस्य द्रष्टा चिन्मात्रश्चिदेकरसः अहं अहं प्रत्यय व्यवहार योग्यः ॥ सदाशिवः कैवल्यात्मानित्य कल्याण रूपो महेश्वरः ॥ १८ ॥

इस समय सर्व प्रपञ्चों से विलक्षण बात कहते हैं ॥ जागरण स्वप्न सुषुप्ति इन तीन अवस्थाओं में जो प्रसिद्ध स्थूल प्रविविक्त आनन्द स्वरूप भोग्य अर्थात् जागरण में स्थूल स्वप्न में प्रविविक्त एकान्त पास में रहने वाले भी जिसको नहीं देखते सुषुप्ति में आनन्द स्वरूप विश्व तैजस प्राज्ञ इस तरह से भोक्ता का विभाग जानना स्थूल प्रविविक्त तथा आनन्द स्वरूप का भोग इस प्रकार तीन प्रकार का भोग भी है च शब्द से अधिदैव अध्यात्म भोग भी लेना यह भोक्ता भोग्य भोग समूह जो कुछ है उन सबसे विलक्षण सदा शिव रूप चिन्मात्र साक्षी स्वरूप मैं हूँ ॥ १८ ॥

प्रपञ्च वैलक्षण्यं स्वस्योक्त्वा इदानीं जगज्जन्मादि कारण त्वमपि स्वस्याह

मय्येव सकलं यातं मयि सर्वं प्रतिष्ठितं
मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहं ।१६।

मय्येवेति ॥ मय्यैव मत्तएव ब्रह्मा भिन्नान्नत्वन्यस्मात् सकलं निखिलं भूत भौतिक प्रपञ्च जातं । जात मुत्पन्नं ।। मयि ब्रह्माभिन्ने सर्वं निखिलं विश्वं प्रतिष्ठितं प्रकर्षेण स्थितं प्राप्तं ॥ मयि सर्वं व्याख्यातं लयं याति

विनाशं गच्छति तत्तस्मात्सर्वं जगज्जन्म स्थिति ध्वंसकारणत्वात् ब्रह्म ब्रहद्देशकाल वस्तु परिच्छेद शून्यं ॥ अद्वयं ज्ञातृ ज्ञेयादि विभाग शून्यं अस्मिभवामि अहं ब्रह्मणोऽवगन्ता ।१६।

प्रपञ्च से वैलक्षण्य बता कर इस समय संसार का जन्म पालन तथा नाश का कारणत्व अपने में ही है ऐसा कह रहे हैं ॥ मय्येव सकल मिति मेरे में ही सम्पूर्ण भूत भौतिक प्रपञ्च का समूह उत्पन्न होता है मेरे में ही सम्पूर्ण जगत्प्रतिष्ठित अतिशय स्थिति को प्राप्त होता है मेरे में ही सम्पूर्ण चराचर विनाश को प्राप्त होता है तिस कारण देशकाल वस्तु परिच्छेद से शून्य अद्वयज्ञातृज्ञेय आदि विभाग से रहित वह ब्रह्म ब्रह्म के जानने वाला मैं हूँ ॥ १९ ॥

ब्रह्मणो जगज्जन्म स्थिति ध्वंस कारणत्वाज्जगदाकारत्वेन विकारित्वं प्राप्तं तद्वै तदति दुर्बोध स्वरूपत्वेन वारयति ॥

अणोरणीयान हमेव तद्वन्महानहं विश्व मिदं विचित्रं पुरातनोऽहं पुरुषोऽहमीशोहिरण्मयोऽहं शिव रूपमस्मि ॥ २० ॥

अणोरणीयानिति अणोरण परिमाणात्

अणीयानति शयेनाणुः जगत्कारणभूतोऽहमेव अहं प्रत्यय व्यवहारयोग्योनत्वन्यः । तद्वत् यथाणुस्तथामहान्सर्वस्मादप्यधिकः अहं व्याख्यातं अणीयसां महतां कारणानांच यथाभेदः तथा तवापि स्यादित्यतआह विश्व मिदं सावित्रं भूत भौतिक प्रपञ्च जातं अहं व्याख्यातं अस्य जगत स्तत्वाद्भेदराहित्ये त्वस्मादप्यभेदः स्यादित्यत आह ॥ विचित्रं विविधं त्वयम नन्त भेद वादित्यर्थः तदभिन्नस्य तस्य तवा प्याधानुक्तित्वां स्यादित्यत आह पुरातनश्चिरन्तनः आधुनिक सर्प धारा वलीवर्द मूत्रत्वाद भिन्ना चिरंतनीरज्जु रिवाऽहं व्याख्यातं ॥ पुरुषः परिपूर्णो वस्तुतो अहं व्याख्यातमविद्या दशायानीशः नियन्ता ॥ नियन्तृत्वेसामर्थ्य माह हिरण्मयः ज्ञानप्रचुरः तत्प्रधानोवाऽऽदित्यस्थः सर्वकार्य कारणात्माह व्याख्यातं शिवरूपं मंगल स्वरूपं ब्रह्मास्मि भवामि ॥ २० ॥

जगत के जन्म पालन नाश के कारण होने से तथा जगदाकार होने से ब्रह्म में विकारित्व धर्म प्राप्त होता है उसको अति दुर्बोध स्वरूप दिखा कर वारण करते हैं अणोरणीया निति जगत का कारण अहं प्रत्यय व्यवहार के योग्य मैं ही अणु से भी अणु अतिशय सूक्ष्म रूप हूँ दूसरा नहीं उसी प्रकार सबसे अधिक महान भी मैं हूं ॥ शंका होती है कि ॥ अणु और महान् का जिस प्रकार भेद है वैसा ही आपका भी भेद है समाधान करते हैं ॥ अविद्या के सहित विचित्र जगत मैं ही हूं ॥ जीव और ब्रह्म का अभेद होने पर संसार से भी अभेद प्राप्त होता है तो भी विविध अपने आप अनन्त भेद वाला है संसार के अन्तः पाती संसार से अभिन्न जीव का भी आधुनिकत्व प्राप्त होता है ॥ यह शंका होने पर समाधान करते हैं ॥ पुरातनः चिरन्तनः ॥ पुराना है जिस प्रकार आरोपित सर्प पानी की धारा वली वर्द मूत्र से रस्सी पुरानी है वैसे ही आत्मा सर्व प्रपञ्चों से पुराना है पुरुष परिपूर्ण रूप है ॥ ईश सबका नियम न करने वाला है वह नियमन अविद्या दशा में जानना चाहिये विद्या दशा में तो नियम्यनियन्ता के अभाव होने से ईश कहना नहीं बनता नियन्तृ नियन्तृत्व सामर्थ्य को बताते हैं ॥ हिरण्मयः॥ बहुत ज्ञान वाले ज्ञान जिनमें मुख्य हैं ॥ आदित्य मण्डल में वर्तमान सहकार्य कारण स्वरुप हिरण्मय पुरुष मैं हूँ इसलिये नियम न करने में सामर्थ्य आत्मा को है । तथा शिव स्वरुप मंगलरूप मैं हूँ ॥ २० ॥

इदानीं सर्वं कारणहीनस्य सर्वज्ञतां स्वस्याह ॥

अपाणिपादोऽहमचिन्त्यशक्तिः पश्याम्य चक्षुःसशृणोम्यकर्णः ॥ अहं विजानामि विविक्तरूपो नचास्ति वेत्ता मम चित्सदाहं ॥ २१॥

अपाणि पादः पाणिपादहीनः अहं व्याख्यात मचिन्त्यशक्तिः दुर्बोधशक्तिः एवं भूतोपि जवनोग्रहीतेत्यर्थः ॥ पश्यामि विविधं प्रपञ्च जात मत्र गच्छामि ॥ अवलोकयामि अचक्षु श्चक्षुर्हीनः स अचक्षु द्दष्टा शृणोमि श्रवणं करोमि अकर्णः कर्ण रहितः अहं व्याख्यातं विजानामि त्रिविधं प्रपञ्च जातमवगच्छामि विविक्तरूपः बुद्ध्यादि पृथग्रूपः न चास्ति नास्त्येव वेत्ता कर्म कर्तृ भावेनावगन्ता ममानंदात्मने। भेद रहितस्य चित्स्वयं प्रकाश बोध स्वभावः सदा सर्वदाहं व्याख्यातं ॥ २१ ॥

उस ब्रह्म से भिन्न कोई द्रष्टा तथा श्रोता नहीं है इस श्रुति

के अभिप्राय को ही लेकर इस मन्त्र में कहा गया है सब साधन रहित होने पर भी उसको सर्वज्ञता है पाणिपाद से रहित भी अहं पद वाच्य आत्मा है तो भी अचिन्त्य शक्ति है उसकी शक्ति का ज्ञान बहुत कठिन है ॥ अपाणि पाद होता हुआ भी वेग से चलने वाला है चक्षु रहित है तो भी देखने वाला है कान नहीं हैं तो भी वह आत्मा सुनने वाला है बुद्ध्यादि से प्रथक रूप जिसका है ऐसा आत्मा सब कुछ जानता है कर्म्म कर्तृ रूप से वेत्ता जानने वाला नहीं है आनन्द स्वरूप भेद रहित सदा चित्स्वयं प्रकाश बोध स्वभाव सदा चित्स्वरूप में हूँ ॥ २१ ॥

इदानीं सर्व शास्त्र प्रतिपाद्यस्याऽत्मनः सर्व विकारा भावं दर्शयति

वेदैरनेकैरहमेववेद्योवेदान्त कृद्वेद वि-देव चाहं ॥ २२ ॥ वेदैः ऋगादिभिरनेकै-र्बहुभिरहमेव व्याख्यातं ॥ वेद्यः प्रति पाद्यः ॥ वेदान्त सूत्र कृद्वेदव्या सरूपः वेदविद्वेदान्त कृतो विशेषणं ॥ वेदानां साङ्गानां ॥ सांख्य विद्यास्थानानां वेत्ता वेदवित् स एव नत्वन्यः चशब्दादनेकरूपः सम्पन्नश्चाहं व्याख्यतम नेक विभूतिमत्सत्वेष्विदमेव प्रधान मित्युक्तं

इस समय सम्पूर्ण वेदान्त शास्त्र के प्रति पाद्य आत्मा का समस्त विकार के अभाव को दिखाते है ऋग्वेद आदि समस्त वेदों से मैं ही वेद्य हूँ ॥ वेदान्त का रचने वाला वेद व्यास मैं ही हूं अंग सहित सम्पूर्ण वेद विद्या का जानने वाला भी मैं हूं विभूति वाले जितने सत्व हैं उन सबमें वेद विद्या का विज्ञान ही प्रधान होता है यह इस मन्त्र से कहा गया है ॥ २२ ॥

नपुराय पापे मम नास्ति नाशो न जन्म देहेन्द्रिय बुद्धिरस्ति न भूमिरापो मम वन्हिरस्ति न चानिलो मेऽस्ति नचांवरं च एवं विदित्वापरमात्मरूपं गुहाशयं निष्कलमद्वितीयं ॥ २३ ॥ न पुराय पापेमम नस्पृशत इतिशेषः ॥ नास्तिनाशः विनाशो न विद्यते ममेत्यनुषंगः ॥ न जन्म जनिर्न ममनास्तीत्यनुषंगः ॥ देहेन्द्रिय बुद्धिः देहश्चेंद्रियाणि च बुद्धयश्च देहेन्द्रिय बुद्धिः नास्ति.न विद्यते ममेत्यनुषंगः ॥ न भूमि रापोमम ॥ पृथ्वी सोदका ममनांस्तीत्यनुषंगः ॥ वन्हिः प्रसिद्धः नास्ति न विद्यते ममेत्यनुषंगः ॥

नचानिलोमेऽस्ति ॥ वायुरपि मम न विद्यते ॥ चकाराद्वायवीयकार्यमपि न ॥ नचां बरंचाकाश मपिमम नास्तीत्यनुषंगः ॥ चकाराद्वयमाकाश कार्यं तद्व्यातरिक्ताऽनुक्ताभावार्थम् एवं उक्त प्रकारेण विदित्वासाक्षात्कृत्यपरमात्मरूपं उत्कृष्टा नन्दात्मस्वरूपं गुहाशयं बुद्धिशयानं निष्कलं निर्गतः प्राणः श्रद्धाखं वायु ज्योतिरापः पृथ्वीन्द्रियं मनोऽन्नं वीर्यं तपःमन्त्राः कर्मलोका नाम इतिप्रश्नोक्ताः कलायस्मात्तं अद्वितीयं सजातीय बस्तुशून्यं ॥२३ ॥

मुझको पुण्य पाप नहीं है मेरा जन्म और नाश नहीं है देहेन्द्रिय भी मेरे नहीं।

पृथ्वी जल अग्नि वायु आकाश इनके साथ मेरा कोई सम्बन्ध नहीं है इस प्रकार समझ कर ॥ निष्कल अद्वितीय अंश रहित एक हृदय रूप गुफा में रहने वाला जो परमात्मा का रुप उसको प्राप्त होता है ॥ पुनः इस मन्त्र का विशद अर्थ करते हैं अपने अपने कार्य के साथ पृथ्वी जल अग्नि वायु आकाश मेरे नहीं हैं मैं असंग हूँ इस प्रकार अपने आपको

साक्षात्कार करके उत्कृष्ट आनन्द स्वरूप परमात्मा का जो रूप बुद्धि में वर्तमान है निष्कल है प्राण श्रद्धा आकाश वायु ज्योति जल पृथिवी इन्द्रिय मन अन्न वीर्य तप मन्त्र कर्म लोक नाम इतनी कला जिसमें नहीं हैं सजातीय विजातीय भेद से शून्य ऐसे एक ब्रह्म को प्राप्त होता है ॥ २३ ॥

समस्त साक्षिं सदसद्विहीनं प्रयाति शुद्धं परमात्म रूपं ॥ २४ ॥

समस्त साक्षिमिति समस्त साक्षिणं सर्व द्रष्टारं सदसद्विहीनं भावाभाव वर्जितं तदेव निर्वद्यं गच्छतीत्याह प्रयाति शुद्धं परमात्म रूपं स्पष्टं ।

सबका द्रष्टा भावाभाव से रहित शुद्ध निर्दोष उस परमात्म स्वरूप को ज्ञानी प्राप्त होता है ॥ २४ ॥

एवंभूतं परमात्मानं प्रतिपत्तु मशक्त्याऽशुद्धान्तः करणस्यान्तः करण शुद्ध्यर्थमाह ।

यः शतरुद्रियमधीतेसोऽग्निपूतो भवति स वायु पूतो भवति सुरापानत्पूतोभवति ब्रह्म

हत्यायाः पूतो भवति सुवर्णस्तेयात्पूतोभवति कृत्या कृत्यात्पूतोभवति तस्मादविमुक्तमाश्रितो भवत्यन्त्याश्रमी सर्वदा सकृद्वा जपेत् अनेन ज्ञानमाप्नोति संसारार्णवनाशनं ॥ तस्मादेवं विदित्वैनं कैवल्यं फलमश्नुते कैवल्यं फल मश्नुते इति ॥ २५ ॥

यः प्रसिद्धो मुमुक्षु रनुत्पन्नसाक्षात्कारः शतरुद्रियं नमस्ते इत्यादि रूप रुद्राध्यायमधीते पठति यथा शक्तिः स शतरुद्रियाध्ययनकर्ता अग्निपूतो अग्निभिः श्रौतस्मार्तैः पूतः सु पवित्री कृतोभवति वायुपूतो भवतीति स्पष्टं सुरापानात् मदिरा पानान्महा पातक दोषात्पूतोभवतीति स्पष्टं ब्रह्म हत्या रूपात् महापातक दोषात पूतो भवतीति स्पष्टं कृत्याकृत्यात् कृत्यं करणीयं बुद्धिपूर्वक पापं ॥ अकृत्यं अकरणीयं अबुद्धिपूर्वकं पापं ॥ कृत्यं च अकृत्यं च कृत्या कृत्यं तस्मात्पूतो भवतीति स्पष्टं ॥ तस्माच्छ

तरुद्रियः ध्यनात् अविमुक्तं विशेषेण शास्त्रोक्ता चारान्मुक्ताः रहिताः विमुक्ताः पशवस्तेभ्यो व्यतिरिक्तोऽविमुक्तः पशुपतिः तमाश्रितो भवतीति स्पष्टं अन्त्याश्रमी अन्त्याश्रम उक्तः परमहंसस्य लक्षणं स यस्यास्तीति अन्त्याश्रमी सर्वदा निरन्तरं सकृद्वा कदाचिद्वा दिवसे दिवसे एक वारमित्यर्थः ॥ वा शब्दोऽधिकारि सामर्थ्यानुसारेण व्यवस्थितः विकल्पार्थः अनेन रुद्राध्याय जपेन ज्ञानमहं ब्रह्मास्मीति साक्षात्कार रूपं प्राप्नोति ॥ संसारार्णवनाशनं संसार सागर शोषणं यस्माद्रुद्राध्याय जपोऽशेष पाप निबर्हणद्वारा ब्रह्म ज्ञान हेतुः तस्मात्ततः एवं विदित्वा उक्तेन प्रकारेण त्रिनेत्रध्यानरुद्रा ध्याया ध्यनादिना विदित्वा साक्षात्कृत्य एनं परमात्मानं कैवल्यं कैवलस्यात्मनो भावः कैवल्यं तत्फलं पुरुषाभिलाष विषय सर्व पुरुषार्थ समाप्तिभूतं अश्नुते प्राप्नोति कैवल्यं

फलमश्नुते व्याख्यातं ॥ पद्माभ्यास उपनिषद्ः परिसमाप्त्यर्थः ॥ २५ ॥

ऐसे परमात्मा को जानने को अशक्त अशुद्ध अन्त.करण जिसका है उसके अन्तःकरण की शुद्धि के लिये कहते हैं ।

जो मुक्ति को चाहने वाला प्रसिद्ध तथा उत्पन्न साक्षात्कार जिसको नहीं है वह शत रुद्रिय नमस्ते इत्यादि रूप रुद्राध्याय को यथा शक्ति पढ़ता है वह शत रुद्रिय का पढ़ने वाला केवल पढ़ने से ही श्रौत स्मार्त अग्नियों से अनुष्ठित कर्म के द्वारा जैसा पवित्र होता है वैसाही सुन्दर पवित्र किया जाता है वायु से पवित्र होता है यह अर्थ स्पष्ट है । ब्रह्म हत्या रूप महा पातक दोष से भी पवित्र होता है सुवर्ण चुराने के पातक से छूटता है बुद्धि और अबुद्धि पूर्वक अथात् जान कर और न जान कर जो पाप किये जाते हैं उन सबसे शत रुद्रिय के पाठ करने से छूट जाता है । शास्त्र में कहे हुए आचारों से विशेष रूप से जो रहित हैं वे विमुक्त कहे जाते हैं वे सब पशु हैं उनसे भिन्न अविमुक्त कहा जाता है वह पशुओं का पति शासन करने वाला है उस शासक के धर्म को प्राप्त होता है जो रुद्राध्याय का पाठ करता है अन्त्याश्रमी अर्थात् जिनमें परमहंस का लक्षण पाया जाता है वह कहे जाते हैं सब काल में निरन्तर एक बार अथवा कभी कभी यथा अवसर दिन में एक बार अथवा दो बार अपने सामर्थ्य के अनुसार इस रुद्राध्याय के पाठ से मैं ब्रह्म हूँ इस